**सालङ्काररसप्रसन्नमधुराकाराः कवीनां गिरः**
**प्राप्ता नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान्॥ ४७॥**

चक्रानामित्यादिः। **क्षयम्**=विनाशम्, आगताः। तथाच मत्कवितानां क्षीरवद् गुणग्राहका न केऽपि सन्तीतिभावः। **सताम्**=सज्जनानाम् वाचः, **गुणलवश्लाघ्याः**=गुणस्य लवेन कणेनापि श्लाघ्याः प्रशंसनीयाः न, भवन्ति, **कवीनाम्**=उत्तमप्रबन्धकर्तृणाम्, **सालङ्काररसप्रसन्नमधुराकाराः**=सालङ्काराः अलङ्कारसहिताः, **अलङ्कारत्वञ्च**—रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यितरनिष्ठा या विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्। भवति च अनुप्रासादिविशिष्टशब्दज्ञानात्, उपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदय इति विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तादृशे शब्दे अर्थे च तदवच्छेदकत्वमनुप्रासादौ, उपमादौ चेति लक्षणसमन्वयः। व्यङ्ग्ये रसादिभिन्नत्वनिवेशाच्च रसवदलङ्कारासंग्रहः। तादृशव्यङ्ग्यभिन्नत्वनिवेशान्न व्यङ्ग्योपमासंग्रहः। रसप्रसन्नाः रसान्विताः अतएव मधुरस्वरूपाः, **गिरः**=उक्तयः, नाशम्, प्राप्ताः, गुणग्राहकव्यक्त्यभावादितिभावः। अतः, **भूमिवलये**=भूमण्डले, **अयम्**=मदीयः **महान्**=रसालङ्कारादिसंयुतः। तुशब्दः पूर्वव्यवच्छेदकः, **प्रबन्धः**=कविता, **जीयात्**=उत्कृष्टेन वर्तताम्। अनेन प्रबन्धेन मम कीर्तिलाभः प्रसन्नता च भवत्विति कवेराशयः। तदुक्तमग्निपुराणे व्यासदेवेन—

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति॥ इति।

एतादृशं मदीयमपि काव्यमिति गूढाभिप्रायः। **शार्दूलविक्रीडितं छन्दः**॥४७॥

उमरावाङ्गसम्भूतं नरसिंहस्य जन्मदम्।
अनहेरं कुलपतिं **नौमि** तं प्रपितामहम्॥ १॥
विद्वद्वृन्दविलासिता भगवती संराजते सर्वदा
यत्रास्ते च विशालभालललिता लक्ष्मीः स्वयं सुस्थिरा।
पुण्ये '**तत्पटसा**' ख्यपत्तनवरे श्रीद्वारवङ्गस्थिते
सानन्दं मृदुचेतसा निवसता व्याख्या मया पूरिता॥ २॥

॥ इति प्रबोधिनीव्याख्या समाप्ता॥

# वेणीसंहारस्थपद्यानामनुक्रमणिका।

इति अनुक्रमणिका ।

—॥—


प्राप्तिस्थानम्—

चौखम्बा–संस्कृत–पुस्तकालय,

बनारस सिटी ।